# Atha Nyasanushasanam

# अथ न्यासानुशासनम्

## Document Information

Text title : Atha Nyasanushasanam

File name : nyAsAnushAsanam.itx

Category : misc, sahitya, article, pradIptakumArananda

Location : doc_z_misc_general

Author : (Copyright) Pradipta Kumar Nanda, Kendrapara, Orissa pknanda65 at gmail.com

Transliterated by : Pradipta Kumar Nanda

Proofread by : Pradipta Kumar Nanda

Acknowledge-Permission: (Copyright) Pradipta Kumar Nanda

Latest update : May 13, 2021

Send corrections to : sanskrit@cheerful.com



May 14, 2021

*sanskritdocuments.org*

# अथ न्यासानुशासनम्

लेखकः - नन्दप्रदीप्तकुमारः

भगवतो वेदस्य प्रायोगिकं महत्वमेव कर्मकाण्डं नाम । विशालं चास्य भारतीयकर्मकाण्डकलेवरम् । मन्त्रब्राह्मणात्मकः शब्दराशिः सर्वतो हि दुरधिगमः । तस्य वेदस्य प्रायोगिकं स्वरूपं कर्मकाण्डं परमदुर्गममिति नाविदितं विदुषाम् । गहनतत्त्वस्य चिन्तनं सूक्ष्मरीत्यास्मिन् विराजतेतमाम् । वेद-ब्राह्मणवचनानां प्रयोगात्मिकायाः सृष्टेरेव कर्मकाण्डे सन्निवेशो दृश्यते । भारतीयमनीषिणां विचित्रा देवोपासनाशैली अत्र बृहदाकारेण प्राप्यते । भारतीयकर्मकाण्डानां केचिद्दंशाः साक्षाद् वेदप्रतिपादकाः श्रोत्रापरपर्य्यायाः केचिच्च वेदमूलक- स्मृतिपुराणादिविभिन्नधर्मग्रन्थोक्ताः ऋषिमहर्षिभिः साक्षात्कृतधर्मभिर्विवृताः केचिद् हि तत्तद्वेदमूलकशास्त्रच्छायाश्रिताः अलोकिकशक्तिसंपन्ना सत्यवाग्भिः सुव्यवस्थिताः विराजतेतमाम् । देवतानां सन्तोषाय तैः बहुविधा प्रयोगाः विधयश्च प्रदत्ताः । तेषु प्रयोगेषु न्यासतत्त्वमन्यतमम् । तत्र न्यासो नाम स्वांगेषु देवताप्रतिमासु वा मन्त्रादीनां सन्निवेशः । न्यस्यते अनेन इति न्यासः । नि उपसर्गपूर्वक अस् धातोः घञ् प्रत्यययोगेन न्यासशब्दः सिद्ध्यति । मन्त्रबीजानां देवशरीरे यथास्थानेषु संस्थापनेन मृण्मयीप्रतिमा धातुनिर्मितविग्रहो घटो वा देवत्वमाप्नोति । देशिकस्य दैवीभावः समुदेति, देवो भूत्वा देवं यजेदिति न्यायात् । तथाहि प्रपञ्चसारे-

आत्मनो देवताभावप्रदानाद्देवतेति च ।
पदं समस्ततन्त्रेषु विद्वद्भिः समुदीरितम् ॥ (६/५)

इति । न्यासो पूजकस्य सदुपार्जितं धनम् । तस्य सत्पात्रेषु विनियोगो न्यासः । अयं न्यासः साधकं सर्वदा रक्षति । पितृमातृवत् परिपालयति । यथाविधि न्यासे कृते तस्य पूजनकालीन-साधनकालीन च विघ्नाः सर्वथा विनश्यन्ति । यच्चोक्तं कुलार्णवे-

न्यायोपार्जितवित्तानामंगेषु विनिवेशनात् ।
सर्वरक्षाकराद्देवि न्यास इत्यभिधीयते ॥ (१७/५६)

इति । न्यासकर्ता विष्णुलोकं गच्छति । तत्र वैकुण्ठीयसुखमनुभवितुं पारयति । साक्षान्नारायणो भवितुमर्हतीति वक्ष्यमाणं प्रमाणं द्रढीकरोति । तथाहि पाद्मे-

शिखायां श्रीधरं न्यस्य शिखाद्यः श्रीकरं तथा ।

हृषीकेशं तु केशेषु मूर्ध्नि नारायणं परम् ॥

एवं न्यासविधिं कृत्वा साक्षान्नारायणो भवेत् ।
यावन्नव्याहरेत् किञ्चित् तावद्विष्णुमयं स्थितः ॥ (६/७९/१७)

इति । कर्मभेदे शास्त्रे बहुविधाः न्यासा उक्ताः । तेषु अंगन्यासः,करन्यासः, ऋष्यादिन्यासः, जीवन्यासः, पीठन्यासः, प्रणवन्यासः, मातृकान्यासः, बहिर्मातृकान्यासः, अन्तर्मातृकान्यासः,सृष्टिन्यासः,स्थितिन्यासः,संहारन्यासः,हंसन्यासः मूलमन्त्रन्यासः,कंठादिन्यासः,षोढ ग्रहन्यासः,केशवादिन्यासप्रमुखा मुख्याः । एतेषां प्रयोगाः प्रायशः सर्वपूजासु अन्तर्भूता भवन्ति । एतदतिरिक्ताः बहवो न्यासाः तन्त्रग्रन्थेषु दृश्यन्ते । चतुषष्ठि संख्यकाः न्यासाः तन्त्रादि आगमग्रन्थेषु प्रयुक्ता भवन्ति । एतेषु न्यासेषु मातृकान्यासस्य महिमा श्रेष्ठः । मातृकाणां प्रयोगस्तु मातृकान्यासः । स्वच्छन्दे - न विद्या मातृका परा (११/१९९) इति मातृकान्यासस्य सर्वश्रेष्ठता प्रमाणीकृता । अपि च ललितासहस्रनामस्तोत्रे मातृकान्यासः O◌ंकारात् समुद्भूतः सर्वमंगलकरः परमानन्ददायकः सर्वसिद्धिप्रदायक इति परमाचार्येण श्रीमदादिशंकरेण स्वकीये भाष्ये समुल्लिखितः । मातृकान्यासश्चतुर्धा विभक्तः । तस्य फलभेदोऽपि शूयते । यदुक्तं तन्त्रसारे-

चतुर्द्धा मातृका प्रोक्ता केवला विन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥

विद्याकरी केवला च सोभया वृद्धिकारिणी ।
सविसर्गा पुत्रदा च सविन्दु वित्तदायिनी ॥

इति मातृकान्यासः चतुर्विधः । तेषु विन्दुः=अनुस्वारसहितः, अं नमः ललाटे इति प्रथमः, वित्तदायकः सर्वसंपत् विधायकः । केवलः सप्रणवः । ॐ नमः ललाटे इति द्वितीयप्रकारको मातृकान्यासः, सर्वविद्याप्रदायकः । अः नमः ललाटे इति सविसर्गस्तृतीयः, पुत्रप्रदायकः आनन्ददायकः । अं अः नमः ललाटे इति उभयश्चतुर्थः, वृद्धिकारको विख्यातः तन्त्रशास्त्रे बहुषु आगमनिगमयामलग्रन्थेषु ।
एतद्विषयेऽपि चान्यत्र निवन्धे-

ओमाद्यन्तो नमोन्तो वा सविन्दुविन्दुवर्जितः ।
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥

इति पञ्चाशद्वर्णानां सप्रणवपुरःसरं नमोऽन्तेन प्रयोगः विन्दुयुक्त अयुक्तो वा मातृकान्यासो विहितः । अपि च तन्त्रान्तरे-

वाग्भवं कामबीजं च श्रीबीजं च त्रितारकम् ।
शक्तिश्रीकामबीजं च त्रितारं मुनयो विदुः ॥

शक्तिबीजं, श्रीबीजं, कामबीजं च त्रितारकम् । यद्वा वाग्बीजं कामबीजं श्रीबीजमिति एतानि बीजत्रयाणि तारकसंज्ञितानि उक्तानि । मातृकान्यासेऽपि एतेषां संयुक्तप्रयोगः सर्वसिद्धिकारकः । सृष्टिस्थितिसंहारक्रमेण त्रिप्रकारको मातृकान्यासः कल्पितः । कल्पोक्तविधिना एतेषां प्रयोगः अवश्यमेव करणीयः । यच्चोक्तं वीरचूडामणौ-

मातृकात्रितयं कुर्यात् सृष्टिसंहारकस्थितम् ।
न्यासं कुर्यात् महेशानि कल्पोक्तं च विशेषतः ॥

अन्यत्र कुलार्णवे अन्यन्यासेषु षोढान्यासस्य कीर्तनं भूतम् । अयं षोढान्यासः सर्वेषु श्रेष्ठः । तथा हि -

प्रपञ्चो भुवनं मूर्त्तिर्मन्त्रदैवतमातरः ।
महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः ॥ (४/२०)

इत्यत्र प्रपञ्चन्यास-भुवनन्यास-मूर्तिन्यास-ऋष्यादिन्यास- मातृकान्यासेषु षोढान्यासः अग्रे धावति । किं बहुना ऋषिछन्दोदेवान् विनापि न्यास अकरणीयः । अनेन न्यासफलं पूर्णतया न लभ्यते । यच्चोक्तं शारदातिलके-

ऋषिछन्दोदेवतानां विन्यासेन विना यदा ।
जप्यते साधितोऽप्येष तस्य तुच्छफलं भवेत् ॥(४/३०)

इति । अपि च महाफलं तावत् मेरुतन्त्रे-

यो न्यासकवचच्छन्दो मन्त्रं जपति तं प्रिये ।
दृष्ट्वा विघ्ना पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥

इति विश्वकल्याणकामनापरकाणि भारतीयकर्मकाण्डानि महतास्स्दरेण संपादनीयानि । पूजनस्थलेषु निर्दिष्टनियमानुसंन्धानेनात्र पूजाफलसम्भवात् । तन्त्रग्रन्थेषु आसनशुद्ध्यादारभ्य ब्राह्मणभोजनान्तं यानि कर्माणि अस्माकं कृते निर्दिष्टानि सन्ति तान्येवास्माभिरवश्यमेव शास्त्रोक्तनियमेन संपालनीयानि । तथा हि भगवता गीतायां-

तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्तमिहार्हसि ॥ (१६/२४)

इत्यलं विस्तरेण ।

— लेखकः - नन्दप्रदीप्तकुमारः

Written by Dr. Pradipta Kumar Nanda, Kendrapara, Orissa pknanda65 at gmail.com

